## ६३. ग्रन्थसमाप्तिकथनम् ।

*आदितः सर्वकल्पेषु ग्रन्थमानमजायत ।
अनुष्टुभां पञ्चत्रिंशच्छती षष्ट्यधिका स्थिता† ॥ १ ॥

क्वार्थी सजेत्[1] ? किं प्रतिषेधवाचि
पदं ? ब्रवीति प्रथमोपसर्गः ।
कीदृग् निशा ? प्राणभृतां प्रियः कः ?
को ग्रन्थमेतं[2] रचयांचकार ? ॥ २ ॥
—जिनप्रभसूरयः ।

नन्दा-ऽनेकप-शक्ति-शीतगुमिते श्रीविक्रमोर्वीपते-
र्वर्षे भाद्रपदस्य मास्यवरजे सौम्ये दशम्यां तिथौ ।
श्रीहम्मीरमहम्मदे प्रतपति क्ष्मामण्डलाखण्डले[3]
ग्रन्थोऽयं परिपूर्णतामभजत श्रीयोगिनीपत्तने ॥ ३ ॥
तीर्थानां तीर्थभक्तानां कीर्तनेन पवित्रितः ।
कल्पप्रदीपनामाऽयं ग्रन्थो विजयतां चिरम् ॥ ४ ॥

॥ इति श्रीकल्पप्रदीपग्रन्थः समाप्तः ॥

॥ ग्रंथाग्र ३५६०§ ॥

---

* P आदर्शे निम्नप्रकारेण पाठभेदो लभ्यतेऽस्मिन् पद्ये-
आदित [ः] सर्वमध्ये (?) कल्पेषु ग्रन्थाग्रमिह जानत । अनुष्टुभामष्टयुता दशनप्रमिताः शताः ॥
† C समधिका त्रिभिः; Pa षष्ट्यधिका त्रिभिः । 1 A भजेत्; P सज्जेत् । 2 Pa °मेते; A C °मेकं । 3 Pa °मण्डलेऽखण्डले । § Pa C ३५०३; B ३९६० ।

**A. D. P.** सञ्ज्ञकादर्शेषु प्रतिलेखयित्रादिसूचका निम्नस्वरूपा उल्लेखा विद्यन्ते ।

A आदर्शस्थ उल्लेखः—

श्रीमालीवंशमुक्तातः सञ्जातो विवहारिकः ।
देवा इत्यभिधानस्तत्पत्नी हासलदेव्यभूत् ॥ १ ॥
तयोर्जाता पु( सु )ता एते प्रथमो मांडणाह्वयः ।
पद्मसिंहो द्वितीयोऽभूत् मालदेवस्तृतीयकः ॥ २ ॥
लिखापितः प्रमोदात्तैस्तीर्थकल्पोऽयमुत्तमः ।
स्वकीयमातृपितृणां श्रेयार्थं पुण्यवृद्धये ॥ ३ ॥
षट्षष्टिवत्सरे जाते चतुर्दशशताधिके ।
श्रीविक्रमभूपालात् भाद्रशुद्धजयातिथौ ॥ ४ ॥

---

D आदर्शगत उल्लेखः—

अकब्बरोर्वीरमणप्रदत्तजगद्गुरुख्यातिधरो बभूव ।
श्रीहीरसूरिर्विजयं दधानः श्रीवर्द्धमानप्रभुशासनेऽस्मिन् ॥ १ ॥
तदीयपट्टाम्बरभानुमाली सूरीश्वरः श्रीविजयादिसेनः ।
तपागणं यः प्रथितं चकार विजित्य भूपालसभे द्विजौघम् ॥ २ ॥
श्रीविजयतिलकसञ्ज्ञे सूरिवरे तत्पदे श्रियं श्रयति ।
वैराग्यवासितान्तःकरणैः शुद्धोपदेशरतैः ॥ ३ ॥
हैमगुरुवृत्तिकाव्यप्रकाशमणिमुख्यशास्त्रनिष्णातैः ।
श्रीविजयसेनसूरीश्वरशिष्यै रामविजयबुधैः ॥ ४ ॥
पञ्चदशलक्षपुस्तकचित्को [ शो ] ज्ञानभक्तये विहितः ।
आचन्द्रार्कं नन्दतु विज्ञजनैर्वाच्यमानोऽसौ ॥ ५ ॥

---

P आदर्शस्थित उल्लेखः—

॥ संवत् १५६९ वर्षे चैत्रादौ संवच्छरे । आषाढमासे । शुक्लप्रतिपदिने । सोमवासरे । पुनर्वसुनक्षत्रे । वैरिसिंहपुरे । श्रीमालज्ञातीय । बहकटा गोत्रे । महं० जिणदत्तपुत्रप्रवरप्रासादपौषधशालादि पुण्यकार्यकरण सावधानचित्त । सप्तक्षेत्रसफलकृत निजवित्त । धर्मधुरंधर । महं० भोजा भार्या वइजलदे पुत्र । एकांतदेवगुरुभक्त । श्रीशांतिनाथचरणकमलार्चनासक्त । महं० रायमल भार्या सरसतिपुत्र चिरं० लषणसी महणसी द्वि० भा० करमाई प्रमुष पुत्र परिवारसहितेन महं० रायमलसुश्रावकेण सर्वतीर्थकल्पग्रंथो लेष ( ख ) यित्वा दत्तः । श्रीखरतरगच्छे । पूज्य म० श्रीजिनभद्रसूरिपदे श्रीजिनचंद्रसूरिशिष्य श्रीजिनेश्वर सूरिशिष्य वा० साधुकीर्तिगणीनां समर्पितश्च ॥ सकलसंघस्य शुभं भवतु ॥ कल्याणमस्तु ॥ ७ ॥

*

## A. सञ्ज्ञकादर्शप्रान्ते

## निम्नोद्धृता ग्रन्थगतसर्वकल्पानामनुक्रमणिका लिखिता लभ्यते ।

॥ श्रीसमग्रग्रन्थाग्रं० ३९६० शुभम् ॥

# विविधतीर्थकल्पग्रन्थान्तर्गत-विशेषनाम्नां सङ्ग्रहः ।

## ⁕ अकाराद्यनुक्रमेण ⁕

[ सङ्केत सूचना–(प्रा०)=प्राकृतभाषाशब्दः; (सं०)=संस्कृतभाषाशब्दः; (या०)=यावनीभाषाशब्दः । ]